# त्रिक्रमलक्षणम्

मा स्थान्महित्वनानाकं प्रियधाविशतोषु णः
मो षू णश्चार्यमायाति पूषाधत्ताप्यधत्त युक् १
दक्षिणावर्ततोत्या प्र ऋचा सादयतीति च
भूत्वाहरच्च मावृक्षि भूताविश विशत्यपि २
कृत्वा हरति धत्ते च लभते त्रिक्रमाः स्मृताः
दध्ना तनक्ति चोद्गातारोहतीति च विंशतिः ३
आकारान्तमुदात्तान्तमाङ्परं यत्र दृश्यते
त्रिक्रमं तं विजानीयान्मो षू ण ऊ षु णस्तथा ४

Reference:
Trikrama Lakṣaṇam, page 18 in the Ātreya Śikṣā bundle, (cod. Palmbl. III 8/133) in the collection of the Hamburg Staats-Universitaet Bibliothek, Grantha script on palm leaves, 1 folio.
"Trikramalakṣaṇam āha in Sarvasaṁmata Śikṣā" in Stautzebach, Ralf, *Pāriśikṣā und Sarvasaṁmataśikṣā: Rechtlautlehren der Taittirīya-Śākhā*, Franz Steiner Verlag: Stuttgart, 1994, pp. 210-212.